न्तिकं गते। आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति॥" "तद्भावभावमापन्नस्ततोऽसौ परमात्मना। भवत्यभेदो भेदश्च तस्याज्ञानकृतो भवेत्॥" इत्यादि श्रुतिस्मृतिशतेभ्यः। भगवान् सूत्रकारोऽप्याह—

---

यावत्। तथाच ज्ञानेनाभेदजनके ज्ञाने नष्टे सत्यात्मब्रह्मणोरसन्तं भेदं कः करिष्यतीति कश्चिन्मूर्खो योजयाञ्चकार, तद्वाक्यशेषापरिज्ञानदोषकृतमत एव तस्य मूर्खत्वमित्याह— तद्भावेति॥ ब्रह्मसाक्षात्कारवशात् ब्रह्मभावापत्तौ व्याससूत्रं संवादयति— अस्मिन्नस्य च तद्योगं शास्ति॥ अस्मिन् ब्रह्मणि अस्य ब्रह्मविदः तद्योगं ब्रह्मभावापत्तिं शास्ति शास्त्रं "यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दतेऽथ सोऽभयं गतो भवती"त्यादि। अस्यार्थः— यदा यस्मिन् काले एष साधनचतुष्टयसम्पन्नोऽधिकारी श्रवणादिसाधनतत्परः अदृश्ये दृश्यविलक्षणे सत्यरूपे नित्यापरोक्षसाक्षिणि "यत्तदद्रेश्यमग्राह्यमस्थूलमनण्वह्रस्वमशब्दमस्पर्शमरूपमव्ययं" "स वा एष महानजर आत्माऽजरोऽमरः" "सपर्यगाच्छुक्रमकायमव्रणं" "स एष नेति नेत्यात्मे"त्यादि श्रुत्यन्तरेभ्यः। नात्म्यमनात्म्यं तस्मिन् स्थूलशरीरविलक्षणे। "अशरीरं शरीरेष्वनवस्थेष्ववस्थितमि"ति श्रुत्यन्तरात्। न निरुक्तमनिरुक्तं तस्मिन्सूक्ष्मशरीरविलक्षणे। "इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः। मनसस्तु परा बुद्धिः बुद्धेरात्मा महान् परः। महतः परमव्यक्तमव्यक्तात्पुरुषः परः।" "प्राणा वै सत्य तेषामेष

"अभिन्नस्य च तयोर्मं शास्ती"ति । तस्मादहं ब्रह्मास्मीति तत्त्वमस्यादिवाक्यजन्यज्ञानात् ब्रह्मभावलक्षणो मोक्षो भवतीति सिद्धम्; "न स पुनरावर्तते" "तद्बुद्धयस्तदात्मानस्तन्निष्ठाः तत्परायणाः । गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥" इत्यादि श्रुतिस्मृतिभ्यः ॥

---

सत्यमि"त्यादि श्रुत्यन्तरेभ्यः ॥ निलीयतेऽस्मिन् जगति निलयनं न निलयनमनिलयनं तस्मिन्नज्ञानविलक्षणे । "अक्षरात्परतः पर" इति श्रुत्यन्तरात् ॥ एष कार्यकारणविलक्षणे प्रत्यग्भूते सत्यज्ञानानन्दैकरसे ब्रह्मणि अखण्डैकरसब्रह्मात्मनाऽवतिष्ठत इति । परमप्रकृतमुपसंहरति— **तस्मादिति** ॥ तत्र श्रुतिस्मृती उदाहरति— **नेति** ॥ तथा व्यासोऽप्याह— "अनावृत्तिः शब्दा-द्"िति ॥ तस्मान्मुमुक्षूणामिहैवोत्पन्नसाक्षात्काराणां ब्रह्मलोकं गतानां निष्कामानामुपासकानां वा नाऽऽवृत्तिः । आवृत्तिः शरीरान्तरस्वीकारः, न आवृत्तिरनावृत्तिः जन्ममरणनिवृत्तिर्मोक्ष इति यावत् । "यदा सर्वे प्रमुच्यन्ते कामा यस्य हृदि श्रिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते" । इति श्रुतेरस्मिन्मनुष्यशरीरे उत्पन्नब्रह्मसाक्षात्काराणामत्रैव मोक्षो भवति । "ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसञ्चरे । परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ।" इत्यादिस्मृतेश्च ब्रह्मलोकगतानां निष्कामानां उपासकानां तत्रैवोत्पन्नब्रह्मसाक्षात्काराणां ब्रह्मणा सह

श्रीमत्स्वयंप्रकाशाख्यगुरूणां करुणावशात् ॥
उपदिष्टं परात्मैक्यं तत्त्वमावेदितं मया ॥ १ ॥

ब्रह्मेशविष्ण्वादिसमस्तदेवाः
स्वस्वाधिकारेषु विभीतचित्ताः ॥
आज्ञावशा यस्य वसन्ति सर्वे
तं कृष्णमाद्यं शरणं प्रपद्ये ॥ २ ॥

---

मोक्षो भवति, सकामानां तु ब्रह्मलोकं गतानामपि पुनरावृत्ति-रस्त्येव, नेतरेषाम्— । "इमं मानवमावर्त्तं" इति श्रुतेरिति सूत्रतात्पर्यार्थः । इदं सर्वं परमरहस्यं परमकृपालुना गुरुणाऽह-मुपदिष्टः, तदेव मया प्रतिपादितमित्याह— श्रीमदिति ॥

तत्त्वं याथात्म्यं परस्यात्मा च परमात्मानौ तयोरैक्यमथवा परमात्मनो ब्रह्मण ऐक्यं प्रतीचः तच्च तत्त्वं च परमात्मैक्यतत्त्वं उपदिष्टं च परमात्मैक्यतत्त्वञ्च इति तथा आवेदितं ज्ञापितम् । "सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज । अहं त्वां सर्वपापेभ्यो मोचयिष्यामि मा शुचः ॥" इति भगवद्वचनानुसारेण भगवन्तं श्रीकृष्णं शरणं याति— ब्रह्मेति ॥ मायोपहितस्य परमात्मन एवान्तर्यामिणः कृष्णशब्दार्थत्वात् ब्रह्मादीनां तदाज्ञावशवर्तित्व-मुपपद्यत इति भावः । तदुक्तं भगवता— "अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् । परं भावमजानन्तो मम भूत-महेश्वरम् ॥" इति । "महात्मानस्तु मां पार्थ दैवीं प्रकृति

या भामती शर्वविरिञ्चिविष्णु-
देवादिभिर्नित्यमुपास्यमाना ॥
सदाऽक्षमालाविलसत्कराग्रां
वाग्वादिनीं तां प्रणमामि देवीम् ॥ ३ ॥

आकाशपुष्पमिव विश्वमहं निरीक्षे
मग्नोऽस्मि नित्यसुखबोधरसामृताब्धौ ॥
प्रत्यक्षमद्वयमनन्तसुखप्रबोधं
साक्षात्करोमि पदभावनया गुरूणाम् ॥ ४ ॥

---

माश्रिताः। भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम्"। इति। श्रीकृष्णस्तु भगवान् स्वयमिति श्रीमद्भागवते। इदानीं स्वेष्टदेवतां वाग्वादिनीं नमस्करोति— येति॥ ननु— "उदरमन्तरं कुरुतेऽथ तस्य भयं भवती"ति भेददर्शिनोऽनर्थश्रवणान्निर्गुणं ब्रह्मैवानुसन्धेयमित्यशङ्क्य गुरुप्रसादादहमेव निर्गुणं नित्यशुद्ध-बुद्धमुक्तस्वभावं ब्रह्म, न मत्तोऽन्यत् किञ्चीदस्ति दृश्यमान-नामरूपयोर्वन्ध्यापुत्रवदत्यन्ततुच्छत्वेन निश्चितत्वादित्यभिप्रत्याह— आकाशेति॥

श्रीगुरूणां पादारविन्दभावनया प्रत्यगात्मानमद्वितीयंसाक्षा-त्करोमि। "यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ। तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः॥" इति श्रुते-रिति भावः। इममेवार्थमन्वयव्यतिरेकाभ्यां स्फुटीकरोति—

यत्पादयुग्मकमलाश्रयणं विनाऽहम् ।
संसारसिन्धुपतितः सुखदुःखभाक् स्याम् ॥
यत्पादयुग्मकमलाश्रयणात्सुतीर्णः
तद्देशिकाङ्घ्रिकमलं प्रणतोऽस्मि नित्यम् ॥ ५ ॥

परमसुखपयोधौ मग्नचित्तो महेशम् ।
हरिविधिसुरमुख्यान् देशिकं देशिकानाम् ॥
जगदपि न विजाने पूर्णसत्यात्मसंवित् ।
सुखतनुरहमात्मा सर्वसंसारशून्यः ॥ ६ ॥

---

यत्पादेति ॥ गुरुचरणारविन्दध्यानलब्धब्रह्मानुभवं प्रकटयति द्वाभ्यां श्लोकाभ्याम्— परमेत्यादिना ॥ प्रपञ्चमिथ्यात्वनिश्चयेन ध्यानयोगेन परमानन्दाकारान्तःकरणसौख्यात् साक्षात्कारेणाज्ञान तत्कार्ययोर्बाधितत्वात् ब्रह्मविष्णुमहेश्वरोपाधीनां गुणिमायाबाधेन तदुपाधीनां च बाधात् जगदपि किञ्चित् न जानामीति ॥ तर्हि कथं तिष्ठति इत्याकाङ्क्षायां तदवस्थितिं दर्शयति— पूर्णेति ॥ पूर्णः अपरिच्छिन्नः ॥ सत्यात्मा कालत्रयाबाधित-स्वरूपः । संवित् चिद्रूपः ॥ सुखतनुः सुखस्वरूपः । सर्वसंसार-शून्यः । "असङ्गो ह्ययं पुरुषः" इत्यादिश्रुत्या कर्तृत्वादिसर्वसंसार-वर्जितः आत्माऽहमित्यनुभवामीत्यर्थः ॥ भिन्नतया स्वेष्टदेवतामपि

**यदुकुलवररत्नं कृष्णमन्यांश्च देवान् ।**
**मनुजपतिमृगादीन् ब्राह्मणादीन्न जाने ॥**
**परमसुखसमुद्रे मज्जनात्तन्मयोऽहम् ॥**
**गलितनिखिलभेदः सत्यबोधैकरूपः ॥ ७ ॥**

इति श्रीपरमहंस-परिव्राजकचार्य-श्रीमत्स्वयं प्रकाशानन्दसरस्वती-पूज्यपादशिष्य-भगवन्महादेवसरस्वतीमुनिविरचिते तत्त्वानुसन्धाने चतुर्थः परिच्छेदः । समाप्तश्चायं ग्रन्थः ।

ओं तत्सत् ॥ शुभं भवतु ॥

---

न पश्यामीत्याह— **यदुकुलेति** ॥ तत्र हेतुमाह— **परमसुखेति** ॥

उपासकानां कार्यार्थं तमसो विनिवर्तकम् ॥
श्रीकृष्णस्य गलेऽद्वैतचिन्ताकौस्तुभमर्पितम् ॥ १ ॥
अध्यारोपापवादोन्मुदितजडतनुर्द्वैतहेतुः परात्मा ।
आम्नायान्तैकगम्यः श्रुतिमतिसहितध्यानयोगेन वन्द्ये ॥
चीर्णे साक्षात्कृतोऽसौ मुनिवरनिकरैः शुद्धसत्त्वैरुदारैः ॥
मुक्तैर्गम्यो मुकुन्दो यदुकुलतिलकः श्रेयसे भूयसेऽस्तु ॥ २ ॥
जिज्ञासितव्यो विमलान्तरङ्गैरानन्दविज्ञानसदेकरूपः ॥
वेदान्तवेद्यो यतिवर्यगम्यो गोपीजनेभ्यः प्रदिशत्वभीष्टम् ॥ ३ ॥

वाणीति वेदवचनानि वदन्ति देवीम् ।
यामात्मयोनिगृहिणीं हृदये स्मरन्ति ॥
यच्चिन्तया सकलशास्त्रकृतो भवन्ति ।
तामनतोऽस्मि सततं प्रणतेष्टदात्रीम् ॥ ४ ॥
दुरन्तसंसारमहाम्बुराशेः समुद्धृतो येन कृपाम्बुनाऽहम् ।
महत्तमं तं पुरुषोत्तमं श्रीस्वयंप्रकाशं गुरुमानतोऽस्मि ॥ ५ ॥
यन्नामरूपाणि निरस्य वेदो यद्बोधयेन्नित्यनिरस्तमोहम् ।
प्रसन्नरूपं परिपूर्णरूपमहं तदेवास्मि विमुक्तमव्ययम् ॥ ६ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य-श्रीमत्स्वयंप्रकाशानन्दसरस्वतीपूज्यपादशिष्य-भगवन्महादेवानन्दसरस्वतीमुनिविरचिते तत्त्वानुसंधानव्याख्यानेऽद्वैतचिन्ताकौस्तुभे चतुर्थः परिच्छेदः समाप्तः ॥

ओं तत्सत् । शुभमस्तु ॥